With the best Regards of the author

# सुगमसंस्कृतपाठावली

## (तृतीयो भागः)

THE KUPPUSWAMI SASTRI
RESEARCH INSTITUTE,
MADRAS.

पि. एस्. अनन्तनारायणशास्त्रिणा

विरचिता.

928

*ADVANCE COPIES*

1938

 *[PRICE SIX ANNAS.*

## FOREWORD.

In preparing this series of Sanskrit Readers care has been bestowed upon the choice of matter, gradation of lessons, purity of expression and chastity of idiom. The syllabus has been strictly adhered to and only the required minimum has been embodied in each Reader. The little excess in the number of pages seen in some parts is due to the insertion of a few illustrations. In the preparation of this series I have been solely guided by my own experience as a teacher and I hope this will meet the requirements of our schools.

MAHARAJA'S COLLEGE,
ERNAKULAM,
25—8—'38.

P. S. A. SASTRI.

# विषयसूची

# तृतीयो भागः

## प्रथमः पाठः

### जी मू त वा ह नः

जीमूतकेतोर्विद्याधरराजस्य तनयो जीमूतवाहनः शैशवात्प्रभृति प्रशान्तः कारुणिकश्चासीत् । स स्वीयं राज्यं हर्तुकामेभ्यः सामन्तेभ्यः स्वयं समर्प्य तपसे पितृभ्यामन्वितो मलयाचलमगच्छत् । तत्र प्रवयसौ पितरौ शुश्रूषमाणः कालमनयच्च ॥

एकदा स वीणास्वनमिलितेन मधुरेण गीतेनाकृष्टो गौरीमन्दिरं प्रविष्टो देवीमाराधयन्तीं मनोहराकृतिं मलयवतीं नाम विश्वावसोर्दुहितरं दृष्ट्वा तस्यामन्वरज्यत । सापि जीमूतवाहने सक्तचित्ताभवत् । अथ तौ पित्रोरनुमत्या निर्वृत्तपरिणयौ सुखमवसताम् ॥

जीमूतवाहनस्य तु मानसं परोपकारस्यावसरमलब्ध्वा दूयमानमवर्तत । कदाचन स्यालेन मित्रावसुना सह जलधेः कूले संचरन् स पर्वताकारमस्थिनिकरमवलोक्य केषामिमान्यस्थीनीति तमपृच्छत् । तार्क्ष्येण प्रतिदिनं भक्षितानां भुजगानां तान्यस्थीनीति तद्वाक्यादवगत्य तार्क्ष्यस्य तां निष्ठुरतामनिन्दत् । आत्मत्राणायाश्रितजनं नाशयतो नागराजस्य निस्त्रपतागर्हयच्च ॥

अथैकदा स्वयमेकाकी समुद्रतीरं गतो जीमूतवाहन एकपुत्रं शङ्खचूडं नाम नागमनुसरन्तीं मुहुर्विलपन्तीं तन्मातरं प्रेक्ष्य तां शोकहेतुमपृच्छत् । 'अत्रायमेकपुत्रो मे नागराजेन गरुडाय समर्पितो वध्यशिलामारोढुं व्रजतीति तया निवेदितो जीमूतवाहनः स्वदेहं दत्वा तं गरुडात्परित्रातुं प्रतिमकरोत् ॥

यावदेष नागो गोकर्णेश्वरं प्रणम्य वध्यस्थानं न निवर्तते तावदेव विद्याधरवीरः श्वशुरेण संमानितं रक्तांशुकं वध्यचिह्नं धारयन् वध्यशिलामध्यतिष्ठत् । क्षुधान्धो गरुडः सत्वरमुपेत्य तं खादितुं प्राक्रमत । खाद्यमानस्यापि

तस्य निर्विकारतामालोक्य संभ्रान्तो गरुत्मान खादना-
द्व्यरमत् । जीमूतवाहनस्तु तं सुधीरमकथयत् 'पक्षीन्द्र,
किमिति तृप्तेः प्रागेव भक्षणाद्विरतोऽसि' इति ॥



जीमूतवाहनस्यासाधारणेन सत्त्वेन जातविस्मयो गरुत्मांस्तन्मुखात्सर्वं वृत्तान्तमुपलभ्य पश्चात्तापेन पर्याकुलोऽभवत् । गोकर्णनिलयान्निवृत्तः शङ्खचूडोऽपि स्वनिमित्तां तस्यापदमवगत्य शोकसागरे न्यमज्जत् । विदितवृत्तान्तौ पितरौ चासन्ननिर्याणं तमुपेत्यानुशोचितुमारभेताम् ॥

तावद् गरुडः स्वविक्रमेणामृतवृष्टिं विधाय विद्याधरपतिमजीवयत् । जीमूतवाहनगिरा तदाप्रभृति कारुणिकतां प्रपन्नो गरुडो भक्षितपूर्वानपि नागानस्थिष्वमृतमासिच्य पुनरजीवयत् । नागवैरं सर्वात्मना परित्यज्य तेषामभयं च प्रदत्तवान् ॥

जीमूतवाहनो गौर्याः प्रसादेन नष्टं राज्यं पुनर्लब्ध्वा विद्याधरसाम्राज्ये व्यराजत च । सोऽयं जीमूतवाहनस्त्यागिनामग्रेसरस्य बुद्धदेवस्यावतार इति पुराविदो वदन्ति ॥



## द्वितीयः पाठः

## हैमो नकुलः

राजा युधिष्ठिरो हयमेधं यज्ञमाहृतवान् । तस्मिन् महाक्रतौ संमिलिता महर्षयो महीसुरा नृपतयो विद्वांसश्च राज्ञा यथोचितमपूज्यन्त । पृथग्जना अश्वाचण्डालेभ्यो भोज्यादिभिरतर्प्यन्त । ततः संतुष्टाः सर्वे जना राज्ञो वदान्यतां प्रशंसितुमारभन्त ॥

तथा प्रशंसत्सु जनेषु हेमपार्श्वः कोऽपि नकुलो यज्ञशालां प्रविश्य मनुष्यवाचैवमुच्चैरभाषत । 'अलमलमनया प्रशंसया । नायं यज्ञः कुरुक्षेत्रमध्यूषुष उञ्छवृत्तेर्द्विजवरस्य सक्तुप्रस्थदानेनापि साम्यमर्हति ' इति । एतद्भाषितमाकर्ण्य विस्मितमानसास्तत्रत्यास्तं नकुलं द्विजवृत्तान्तमपृच्छन् । सोऽवदत् श्रूयतामुञ्छवृत्तेः पावनं चरितमवधानेन ॥

आसीत् कुरुक्षेत्रे कश्चिदतिथार्मिकस्तपोधनो द्विजवरः। स चोञ्छेन वृत्तिं निर्वहन्ननेहसमयापयत् । कदाचन महति दुर्भिक्षे कृच्छ्राल्लब्धेन धान्येन सक्तुप्रस्थं संपाद्य स तं चिरादुपोषितस्य कुटुम्बस्यात्मनश्च समं व्यभजत ॥

ततो भोक्तुमारब्धवति ब्राह्मणकुटुम्बे क्षुधितः कोऽप्यतिथिस्तत्रागतः । सोऽतिथिर्ब्राह्मणमन्नमयाचत । ब्राह्मणस्तत्क्षणमात्मनो भागमतिथये प्रायच्छत् । अतिथिस्तं भुक्त्वा न तृप्तिमभजत । तदा द्विजस्य पत्नी स्वमंशं तस्मै दत्तवती । तेनाप्यतृप्ते तस्मै द्विजस्य सूनुः स्नुषा च स्वांशौ समार्पयताम् । एवं कृत्स्नं तत् कुटुम्बकमात्मत्यागेनातिथिमपूजयत् ।

वस्तुतः सोऽतिथिर्द्विजं परीक्षितुमिच्छया धृतशरीरो धर्म एवासीत् । द्विजकुटुम्बस्य त्यागमहिम्ना परितुष्टे च तस्मिन् देवास्तानतिथार्मिकान् विमानेन स्वर्गमनयन् ॥

अथ द्विजगृहे पतितेषु सक्तुकणेष्वेषोऽहमलुठ्यम् । तेन मे पार्श्वमेकं हैममजायत । ततोऽन्यदपि पार्श्वं हैमं कर्तुकामस्तदाप्रभृति सर्वेषु यज्ञेषु व्रजन्नहमिहापि तदर्थमेवाग-

तोऽस्मि । अत्रापि मे न फलितो मनोरथः । अतो नायं यज्ञः सक्तुदानस्य साम्यमर्हति इति ॥

निष्ककोटिं महीपालो दत्वा यल्लभते फलम् ।
निःस्वो वराटिकां दत्वा ततोऽपि लभतेऽधिकम् ॥

---

## तृतीयः पाठः

## दिशो विदिशश्च

यं कमप्यपरिचितं देशं गता यूयं केनोपनायेन दिशो ज्ञातुं प्रभविष्यथ? आदित्यस्योदयं दृष्ट्वा दिशो निर्णेतुं प्रभवामः । तथा हि, आदित्यो यस्यां दिश्युद्गच्छति सा प्राची । सा पूर्वा दिक् इत्यपि व्यवह्रियते । पूर्वाभिमुखं तिष्ठतो दक्षिणः करोऽवाचीं दिशं लक्षयति । तथा तिष्ठतः पृष्ठतो या दिक् सा प्रतीची । पूर्वाभिमुखस्यैव पुंसो वामः कर उदीचीं दिशं च लक्षयति ॥

प्राची, अवाची, प्रतीची उदीची, एताश्चतस्रो दिश उच्यन्ते । अवाच्या दक्षिणेति, प्रतीच्याः पश्चिमेति उदीच्या उत्तरेति च नामान्तराणि ॥

चतसृणां दिशामन्तराले चतस्रो विदिशः सन्ति । दक्षिणस्याः पूर्वस्याश्च दिशोरन्तरालं दक्षिणपूर्वेत्युच्यते । एवं पूर्वोत्तरा, उत्तरपश्चिमा, पश्चिमदक्षिणा चेत्यन्यास्तिस्रः विदिशः ।

प्रादक्षिण्यक्रममाश्रित्य विदिशां पूर्वदक्षिणा, दक्षिण-पश्चिमा, पश्चिमोत्तरा, उत्तरपूर्वा इत्यपि संज्ञाः कृताः । विदिशामपि क्वचिद्दिगिति संज्ञया निर्देशो दृश्यते । यथा अष्टौ दिक्पाला इति ॥

पूर्वादीनामष्टानां दिशामिन्द्रादयोऽष्टौ पतय इति पौरा-णिकैरुच्यते । तथा चोक्तम् ॥

'इन्द्रो वह्निः पितृपतिर्निरृतिर्वरुणो मरुत् ।
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ॥

अस्मिन् श्लोके दिशस्तत्पतयश्च प्रादक्षिण्यक्रमेण निर्दिष्टाः । पालकानां संबन्धेन दिशां ऐन्द्री, आग्नेयी, याम्या इत्यादयो व्यपदेशाश्च भवन्ति ।

यूरोपीयैः शास्त्रविद्भिर्दिशां ज्ञापनाय निर्मितो यन्त्र-विशेषो ग्रहाणां तारकाणां चादर्शनेऽपि दिङ्निर्णयायोपयु-ज्यते । समुद्रयात्रायां सततं व्यापृता नाविका एनेनैव यन्त्रेण दिशं निर्णीय तरणीः प्रार्थितं प्रदेशं नयन्ति ॥

## चतुर्थः पाठः

### सुभाषितानि

सेवितव्यो महावृक्षः
फलच्छायासमन्वितः ।
यदि दैवात् फलं नास्ति
च्छाया केन निवार्यते ॥ १ ॥

चिन्तनीया हि विपदा-
मादावेव प्रतिक्रियाः ।
न कूपखननं युक्तं
प्रदीप्ते वह्निना गृहे ॥ २ ॥

अपराधो न मेऽस्तीति
नैतद्विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो
भयं गुणवतामपि ॥ ३ ॥

यत्र विद्वज्जनो नास्ति
श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे
एरण्डोऽपि द्रुमायते ॥ ४ ॥

हीनसेवा न कर्तव्या
कर्तव्यो महदाश्रयः ।
पयोऽपि शौण्डकीहस्ते
वारुणीत्यभिधीयते ॥ ५ ॥

अयं निजः परो वेति
गणना लघुचेतसाम् ।
उदारचरितानां तु
वसुधैव कुटुम्बकम् ॥ ६ ॥

अखिलेषु विहंगेषु
हन्त स्वच्छन्दचारिषु ।
शुकस्य पञ्जरे बन्धो
मधुराणां गिरां फलम् ॥ ७ ॥

गुणवद्वस्तुसंसर्गात्
याति स्वल्पोऽपि गौरवम् ।
पुष्पमालासुषङ्गेण
सूत्रं शिरसि धार्यते ॥ ८ ॥



## पञ्चमः पाठः

---

### संसर्गस्य प्रभावः

---

आसन्नप्रसवा कापि केसरिणी आमिषं लब्धुकामा छागयूथस्य मध्यमुदप्लवत। प्लुतिवेगेन चलितो गर्भस्तस्या उदरादस्रंसत। सा च तद्वेदनया तत्क्षणं पञ्चतामगच्छत्। अजयूथे पतितः सिंहशिशुरजैः सममेवावर्धत। स सिंहशावकः सन्नपि च्छागशिशुभिः समं तृणानि चरंश्छाग इव विरुवंश्च तत्र तत्र समचरत्॥

अथैकदा कश्चन सिंहस्तन्मेषयूथमन्वधावत्। भयत्रस्तेषु मेषेषु पलायमानेषु तैः समं वर्धमानः स सिंहशावकोऽपि पलायितुमारभत। सिंहस्तदालोक्य नितान्तं विस्मितोऽभवत्। तं सिंहशावकमुपगम्य 'सिंहोऽसि' इति वक्तुं बहुधा प्रायतत च। आत्मानमजं मन्यमानः स शावकस्तु यथा यथा सिंह उपासरत् तथा तथा दूरमपासरत्॥

अपरेद्युस्तस्मिन् सिंहशावके स्वपति स सिंहः शनैस्तन्निकटमगच्छत्, तं स्वात्मबोध्यैवमवदच्च । 'अलं भयेन, त्वमपि मादृशः सिंह एवासि, तदजानां संगं विहायास्मादृशैः संगच्छेथाः'' इति । असकृत्तस्यैवं वदतोऽपि * सिंहशिशुरात्मानमजमेव मन्यमानः क्रन्दितुमुपाक्रमत ॥

तावत्स सिंहस्तं सिंहशिशुं सरसः समीपं नीत्वा 'समीक्ष्यतामत्र पयस्यावयोः प्रतिबिम्बम्' इत्यकथयत् । तदानीमजमात्मानं मन्यमानः सिंहशिशुरात्मनस्तत्त्वमबाबुध्यत । सहसैव स सिंहवद्गर्जितं कुर्वाणः केसरिणा यूथमानीतः करिणां कपोलोत्पाटने पाटवमविन्दत् च ॥

आत्मनस्तत्त्वमज्ञात्वा परितःस्थितिभिर्वयम् ।
परिभूताः प्रतिदिनं भवामः क्लेशभाजनम् ॥

---

* अनादरे षष्ठी

## षष्ठः पाठः

---

### प्रकृता वस्तुप्रकृतिः

---

एकस्मिन् दिने कोऽपि राजकुमार आत्मीये प्रासादे सुखेन पर्यङ्कमध्यासीनोऽवर्तत । मध्याह्ने बुभुक्षया पिपासया च नितान्तमर्दितः कोऽपि पुलिन्दः प्रासादद्वारमुपेत्योच्चैरेवमभाषत । 'महाराज, बुभुक्षया पिपासया च मे प्राणा गतप्रायाः । पदमपि चलितुमक्षमोऽस्मि । कृपया मे किंचिदन्नं पानीयमात्रं वा प्रदीयताम्' इति ॥

आत्मनः सुखावस्थितेरुपरोधेन कुपितो राजकुमारः परुषया गिरा तं प्रत्यभाषत । 'दूरमपसर, नो चेत् किंकरैस्त्वां बहिर्निष्कासयेयं' इति । एतदाकर्ण्य नितान्तमुद्विग्नः स पुलिन्दस्तूष्णीमन्यत्रापसरति स्म ॥

अथातीतेषु कतिपयेषु दिवसेषु स राजकुमारो मृगयायै काननं प्रातिष्ठत । कानने तत्र तत्र पर्यटन्नसौ भानोरस्तमयं यावन्मृगयायामेव व्यापृतोऽवर्तत । अस्तं गते

सवितरि राजधानीं प्रति निवर्तितमक्षमः पन्थानमप्यनवधारयन्नितरामक्लिश्यत । अन्ते स कस्यचित् पुलिन्दस्य पर्णकुटीमुपागच्छत् ॥

स पुलिन्दस्तमातिथिं महतादरेण प्रत्युद्गम्य पाद्यमुपनीय यथावदुपाचरत् । तस्मै मधुराणि वन्यानि फलानि भोज्यानि चाकल्पयत् । पल्लवैरतिमृदु शयनीयं च सज्जमरचयत् । मृगयाश्रान्तः स राजपुत्रस्तां रात्रिं तत्र सुखमेवात्यवाहयत् ।

प्रातः स्वनगरीं गन्तुकामं नृपकुमारं पुलिन्दः पृच्छति स्म । 'महाराज, किं मां प्रत्यवबुध्यसे ?' इति । यावद्राजसूनुस्तस्य वदनं सम्यगालोकयत् तावत्सोऽयं पूर्वमात्मना परुषैर्वचनैर्भर्त्सितः पुलिन्द इत्यवागच्छत् । आत्मनो निष्ठुरतायां जातलज्जः स राजपुत्रः पुलिन्दस्य तथाविधां साधुतां प्रति महान्तं विस्मयमभजत च ॥

## सप्तमः पाठः

## सृष्टिजातम्

लोकेस्मिन् विधात्रा निर्मितानि वस्तूनि प्रथमत एव द्विधा विभागमर्हन्ति । चराणि अचराणि चेति । चरस्य जङ्गममिति अचरस्य स्थावरमिति च नामान्तरे । ये खलु प्राणवन्तो मनुष्याः पक्षिमृगादयश्च स्थानात् स्थानं व्रजन्ति ते जङ्गमाः । ये तु मृत्पाषाणादय एकस्मिन्नेव स्थाने गमनं विना वर्तन्ते ते स्थावराः ॥

अपरेणापि प्रकारेण पदार्थानां विभागः कर्तुं शक्यते । चेतना अचेतनाश्चेति । वृक्षलतादीनामपि चैतन्यमस्तीत्ययमर्थः पुरातनैर्भारतीयैरवगत एव । यतस्ते वृक्षादीनपि शरीरिणां मध्ये गणयन्ति । कृतकिल्बिषाणां मानुषाणां वृक्षात्मना जन्म च वर्णयन्ति ॥

येषां शरीरं विद्यते तानि चेतनानि इतराण्यचेतनानि । चेतनाश्चतुर्धा भवन्ति । जरायुजाः, अण्डजाः, स्वेदजाः,

उद्भिज्जाश्च इति । मानुषाः, चतुष्पादश्च जन्तवो जरायुजाः, ये स्तन्येन शिशून् पोषयन्ति । पक्षिसर्पादयः अण्डजाः । मशकदंशादयः स्वेदजाः । वृक्षलतादय उद्भिज्जाः, ये भूमिमुद्भिद्य जायन्ते ॥

अण्डाज्जायमानाः पक्षिणो द्विजा इत्यपि कथ्यन्ते । यतस्तेषामण्डात् प्रादुर्भावो द्वितीयं जन्म गण्यते । भूमौ सर्पन्तः सर्पगोधादयः सरीसृपा इति च व्यवह्रियन्ते ॥

प्राणिनां शरीरं पञ्चभिर्भूतैः संकलितमिति शास्त्रविदो वदन्ति । पृथिवी, सलिलम्, तेजः, वायुः, आकाशं इत्येतेषां भूतानां गन्धः, रसः, रूपं, स्पर्शः, शब्द इत्येते यथाक्रमं विशिष्टा गुणाः । भूतनिर्मितेषु शरीरेषु सर्वे एते गुणा उपलभ्यन्ते च ॥

एवंविधमनेकधा विभक्तमिदं प्राणिजातमस्माकं दृग्विषयो भवति । दृष्टेरगोचरा असंख्येयाः प्राणिजातयो वायौ

जले च वर्तन्त इति यन्त्राणां साहाय्येन नवीनैः शास्त्रविद्भि-रुपज्ञातमस्ति ॥

सहस्रधा द्योतमानं प्रपञ्चं परमाद्भुतम् ।
इच्छामात्रेण सृजते तस्मै सर्वात्मने नमः ॥

---

## अष्टमः पाठः

### एकलव्यः

धार्तराष्ट्रेषु पाण्डवेषु च द्रोणाचार्यादस्त्रविद्यां शिक्षमाणेषु निषादराजस्य हिरण्यधनुषः सूनुरेकलव्यो द्रोणस्य शिष्यभावं लब्धुकामस्तमुपागच्छत् । निकृष्टजातेर्निषादस्य शिक्षणं द्रोणो नान्वमोदत । परं तु तस्य निर्बन्धविरतये तमेवमभाषत । 'त्वमपि मे शिष्य एवासि । अस्त्रविद्यायां पाटवं च ते भविष्यति' इति ॥

द्रोणस्य वचांसि सुदृढया भक्त्या हृदये धारयन्नेकलव्यो वनं प्रतिनिवृत्तो मृन्मयं द्रोणमाचार्यपदे निधाय

स्वयमस्त्राण्यभ्यसितुमारभत । गच्छता कालेन सोऽस्त्रवि-द्यायां द्रोणशिष्याणामग्रेसरात् सव्यसाचिनोऽपि पटुतरः समजायत ॥

एकदा कौरवाः पाण्डवाश्च मृगयार्थं काननं प्राविशन् । तेषां किंकरमनुसरन् सारमेयो यदृच्छया मलिन-तनोर्निषादसूनोर्निकटं गतस्तमभिलक्ष्य भषन्नवातिष्ठत । निषादसूनुः सप्त सायकान् सारमेयस्य वदने युगपदेव न्यखनत् । स श्वा रुजार्दितः पाण्डवानुपागच्छत् ।

एकलव्यस्य तादृशेनास्त्रलाघवेन विस्मितास्ते तमुपगम्य 'को भवान्' इत्यपृच्छन् । 'निषादराजस्य सूनुं द्रोण-शिष्यमेकलव्यं मामवगच्छत' इति तेन प्रत्युक्तास्ते द्रोणा-चार्यं तद्वृत्तान्तं वक्तुकामास्त्वरितं राजधानीं न्यवर्तन्त ॥

अस्त्रविद्यायामेकलव्यस्य पाटवातिशयमवलोक्य बाण-विद्ध इव दीर्णान्तरङ्गः फल्गुनो गुरुमेवं न्यवेदयत् । 'धनु-र्वेदे निरुपमोसीत्यसकृत् भवता श्लाघितोऽहम् । मत्तोपि

पटुतरो भवतः शिष्यो निषादसूनुरद्यास्माभिर्वने विलोकितः' इति ॥

तत्क्षणं चिरविस्मृतो निषादसूनुर्द्रोणस्य स्मृतिपथमारोहति स्म । अर्जुनस्य यशश्शशाङ्कं ग्रसिष्यमाणं तं शिष्यपक्षपाती द्रोणः केनाप्युपायेनास्त्रप्रयोगेऽसमर्थं विधातुं निरणयत् ॥

अर्जुनेन साकं वनं गतो द्रोणः सततं सायकानस्यन्तमेकलव्यमवैक्षत । स तु गुरुमागतं भक्त्या प्रणम्य 'किं करवाणि' इति बद्धाञ्जलिरयाचत । 'गुरुदक्षिणा दीयताम्' इति वदन्तं द्रोणं 'केन भवान् परितुष्येत्' इति निषादसूनुः पृष्टवान् । 'उपह्रियतां ते दक्षिणकराङ्गुष्ठः' इति द्रोणो निर्दयमभणत् ।

निषादसूनुर्वज्रोपमां तद्वाणीमाकर्ण्याप्यचञ्चलो धीरतायामपि स्वस्य क्षत्रियादतिशयं प्रकाशयन् स्वाङ्गुष्ठं गुरवे दक्षिणामकल्पयत् । निकृष्टजातावप्युदात्तहृदयाः केचित पुरुषाः कदाचिदुत्पद्यन्त एव ॥

## नवमः पाठः

## विद्यार्थिकृत्यम्

ज्ञानसम्पादनमेव विद्यार्थिनां कृत्येषु प्रधानतमं भवति । अतस्तस्मिन् विषये सर्वदापि ते जागरूका भवेयुः । नहि पुस्तकेभ्य एव ज्ञानं लभ्यते । परितो विद्यमानानां वस्तूनां निरीक्षणं पुस्तकपठनादप्यधिकं स्वभावज्ञानायोपयुज्यत इति विद्यार्थिनो मनसि धारयेयुः ॥

सहपाठिभ्यः समाजेभ्यश्च बहु ज्ञानमधिगन्तुं शक्यते । तस्माद्विद्यार्थिनः सहपाठिषु सौहार्देन वर्तेरन्, विदुषां सभा-जानप्याद्रियेरन् । ज्ञानस्य किलैकः पाद एवाचार्यादधिगम्यते, पादः सब्रह्मचारिभ्यः, अन्यः पादः स्वमेधाबलेन, अपरस्तु पादश्चिरपरिचयेनेत्यभियुक्ता आमनन्ति ॥

पुस्तकेभ्योऽधिगता अप्यर्था अनुभवेनैव दृढीभवन्तीति स्मरन्तः सर्वथाप्यनुभवस्यावसरं प्रतीक्षेरन् ; अनुभवेन परिपक्वधिषणान् गुरुजनांश्च सर्वदानुवर्तेरन् ॥

समयस्य महार्घतां मनसि कलयन्तस्तस्य वृथाऽव्ययं च परिहरेयुः ॥

'व्रजन्ति न निवर्तन्ते स्रोतांसि सरितां यथा ।
आयुरादाय मर्त्यानां तथा रात्र्यहनी अपि' ॥

इतीदं सुभाषितं कदापि विद्यार्थिनो न विस्मरेयुः । जलबिन्दुनिपातेन क्रमशो यथा घटः परिपूर्णो भवति तथैवाणुशो ज्ञानसंपादनेन विद्यासु पूर्णं वैशारद्यमासाद्यते ॥

परमपण्डितोऽपि सदाचाररहितः पुरुषो न जनानां बहुमानपात्रं भवति । न वा सदाचारेण विना सुखमस्मिन्नमुष्मिंश्च लोके लब्धुं शक्यते । तस्मात् सर्वोपरि सदाचारं गुणयन्तो गर्हितानि कर्माणि दूरतः परित्यजेयुः ।

भिन्नभिन्नासु दशासु विधिबलान्नियमितैरपरिमितैर्व्यक्तिभेदैः संघटितोऽयं संसारः । सर्वस्यापि गुणांशान् गृहीत्वा दोषान् परिहरन्त एव सुखेन वर्तितुं पारयन्ति । किंचन वस्तु गुणलेशेनापि शून्यं च न दृश्यते । अतो गुणानां

ग्रहणाय प्रयत्नमवलम्बेरन् । दीनेषु दयां, समेषु मैत्रीं, उत्कृष्टेषु च बहुमतिं प्रकाशयेयुः ॥

शरीरमेव मनुष्याणां पुरुषार्थसाधनम् । तस्माच्छरीरस्य स्वास्थ्यं सुखं चावहतो नियमाननुसरेयुः । शरीरबलादपि मानसं बलं श्लाघ्यतरमिति मनश्शक्तेः पोषणायाप्यवश्यं प्रयतेरन् ॥

ईश्वरस्यानुकूल्यमन्तरेण बलवदपि पौरुषं विफलमेव परिणमति । तस्माज्जगतामीशितुः प्रसादसंपादनाय तमेव भजन्तः सर्वात्मना तं शरणं च व्रजेयुः ॥

श्रद्धा शरीरमनसोः स्वस्थता साधुशीलता ।
ईश्वरे परमा भक्तिरेतद्विद्यार्थिनां धनम् ॥



दशमः पाठः

सुभाषितानि

यदेवोपनतं दुःखात्
सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया
तप्तस्य हि विशेषतः ॥ १ ॥

अन्तस्सारविहीनानां
वृथा सज्जनसंगमः ।
मलयाचलमध्यस्थो
वेणुः किं चन्दनायते ॥ २ ॥

यं यथा मन्यते लोको
विद्ययाभिजनेन च ।
तस्मात् किंचिदधस्तिष्ठे-
दारुरुक्षुः परं पदम् ॥ ३ ॥

संहतिः श्रेयसी पुंसां
स्वकुलैरल्पकैरपि ।
तुषेणापि परित्यक्ता
न प्ररोहन्ति तण्डुलाः ॥ ४ ॥

अधोऽधः पश्यतः कस्य
महिमा नोपचीयते ।
उपर्युपरि पश्यन्तः
सर्व एव दरिद्रति ॥ ५ ॥

परोपदेशे पाण्डित्यं
सर्वेषां सुकरं नृणाम् ।
धर्मे स्वयमनुष्ठानं
कस्यचित्तु महात्मनः ॥ ६ ॥

मूलच्छेदं रिपोः कुर्या-
दथवा न प्रकोपयेत् ।
अन्यथासौ विनाशाय
पादस्पृष्ट इवोरगः ॥ ७ ॥

यत्पृथिव्यां व्रीहियवं
  हिरण्यं पशवो धनम् ।
एकस्यापि न पर्याप्त-
  मिति मत्वा शमं व्रजेत्  ॥ ८ ॥

---

## एकादशः पाठः

## हेमहरिणः

स्वसुः शूर्पणखायाः परिभवेन जातरोषो रावणः सीतापहारेण प्रतीकारमैच्छत् । तत्र च मारीचस्य साहाय्यं लब्धुकामस्तमुपेत्यैवमवदत् । 'मारीच, श्रूयतां मे वचनमवधानेन । जनस्थाननिवासिनः सर्वे राक्षसाः कार्मुकद्वितीयेन रामेण कालधर्मं प्रापिताः । भगिनी मे शूर्पणखा तदनुजेन लक्ष्मणेन विरूपिता च । तस्य प्रतिचिकीर्षुरहं सीतां हर्तुमिच्छामि । त्वया हेममृगस्य रूपं धारयता सी-

ताया: प्रमुखे चरितव्यम् । तदा सा कौतुकाविष्टा त्वद्ग्रहणाय भर्तारं लक्ष्मणं च प्रार्थयिष्यते । तयोस्तदर्थं निर्गतयोस्तामहं सुखेन हरिष्यामि' इति ॥

मारीचो वक्रं पन्थानमाश्रितस्य राक्षसपतेरुद्यमं नान्वमोदत । तथापि तस्य निर्बन्धमसहमानः प्राणत्यागेनापि स्वामिनः समीहितं साधयितुमिच्छन् रक्षोराजमन्वसरत् ॥

रामाश्रमं प्रविष्टमात्रः कामरूपी मारीचः क्षणेन मनोहरो हेमहरिणः समजायत । आश्रमपरिसरे कुसुमान्यपचिन्वती जानकी तमाश्चर्यरूपं हरिणं संप्रेक्ष्य जातकौतुका गृह्यतामयमिति रामं लक्ष्मणं च मुहुः प्रार्थयत । प्रियतमया प्रार्थितः स्वर्णमृगस्य रूपेण च प्रलोभितो रामभद्रस्तं ग्रहीतुमकामयत । सीतायाः परित्राणे लक्ष्मणं नियुज्य कार्मुकहस्तो हरिणमन्वधावच्च ॥

मायाविनामग्रेसरो मारीचो रामं विमोहयन् क्षणमात्रं दृश्यमानः क्षणान्तरेऽन्तर्हितश्च काननान्तरेषु धावमानस्तं सुदूरमाकृष्टवान् । मुहुरुपसरन्तं पुनरपसरन्तं च तं निरीक्ष्य

कोपाविष्टो राघवस्तन्निग्रहाय ज्वलितं ब्रह्मास्त्रं तदुपरि क्षिप्तवान् ।

ब्रह्मास्त्रेण प्रहृतो मारीचो रामस्वरानुकारिणा स्वरेण 'हा सीते, हा लक्ष्मण', इति क्रन्दन् प्राणानमुञ्चत् । तदैव रामो राक्षसीं मायां तामवाबुध्यत । आश्रमस्था सीता तं दीनस्वरमाकर्ण्य भर्तुरपायमाशङ्कमाना 'सत्वरं गत्वा राममन्विच्छे'ति लक्ष्मणमसकृत्सनिर्बन्धमयाचत ।

सीतामेकाकिनीं परित्यज्य गन्तुमनिच्छन्नपि लक्ष्मणो निर्बन्धमसहमानस्तद्रक्षणाय वनदेवताः प्रार्थयमानः कथमपि ततः प्रातिष्ठत । तदन्तरमासाद्य पापमती रावणः परिव्राजकरूपेण रामाश्रमं प्रविश्य सीतामपाहरत् ।

"न निर्मितो वै न च दृष्टपूर्वो
न श्रूयते हेममयः कुरङ्गः ।
तथापि तृष्णाजनि राघवस्य
विनाशकाले विपरीतबुद्धिः" ॥

## द्वादशः पाठः

## 'वयं पञ्चोत्तरं शतम्'

वने वसतां पाण्डवानामात्मैश्वर्यं प्रकाश्य संतापं वर्धयितुकामो दुर्मतिर्दुर्योधनो घोषशालामपदिश्य पितुरनुज्ञया सुहृद्भिः कर्णादिभिरनुगतो वनं प्राविशत् । तद्वार्तामवगम्य दुर्योधनं दण्डयितुकामः पुरन्दरः प्रागेव गन्धर्वराजं चित्रसेनं सह सेनया वनाय प्रेषयच्च ॥

दुर्योधनो वने घोषानवलोक्य गोपालकानां सत्कारं च स्वीकृत्य क्रमेण रमणीयानि वनान्युपवनानि च पश्यन् पुण्यं द्वैतवनं प्रापद्यत । धर्मात्मा युधिष्ठिरस्तद्वानीमेकेनाह्वा निर्वर्तनीये यज्ञकर्मणि व्यापृत आसीत् ॥

धार्तराष्ट्रः सरसि क्रीडितुमभिलषन् सरसः पर्यवेक्षणाय यदा किंकरान् प्रेषितवांस्तदा सानुगेन तद्गन्धर्वराजेन पूर्वमेवाधिष्ठितमवर्तत । अविनीतैर्दुर्योधनस्यानुचरैः 'सरसो,

निर्गम्यताम्' इत्याज्ञप्ता गन्धर्वाः क्षुभितहृदयाः 'के वयं दुर्योधनस्याज्ञानुवर्तनाय' इति तद्वचनं तृणीकृतवन्तः ॥

अथ गन्धर्वैः सह प्रवृत्ते समरे पलायिते च सैन्य-समूहे दुर्योधनो जीवग्राहं गृहीतः पाशेन बद्धो गगनमार्ग-मनीयत । अनन्तरमशरणाः सैनिका धर्मसुतं शरणमुपगम्य निवेदितसंतापाः स्वामिनो मोचनं प्रार्थयन्त ॥

दुर्योधनस्य दर्पेण दुश्चरितैश्च स्मृतिपथमारूढैर्दीप्तमन्युर्भी-मसेनस्तानभाषत । 'समुचितमेवेदं दुर्मतेर्दुर्योधनस्य पाशब-न्धनम् । विषमस्थानस्मानवलोक्य प्रमोदमनुभवितुं किला-यमत्रागतः । 'अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम्' । तद्यथागतमितः क्षिप्रं गम्यताम्' इति ॥

युधिष्ठिरो भीमसेनमनुशासदेवमवदत् । 'वत्स, कि-मेवं भाषसे ? नायमवसरो वैरनिर्यातनस्य । भवेयुरेव स-र्वत्र ज्ञातीनां मिथः कलहाः । तथापि बाह्यानां प्रधर्षणेन कुलहानौ प्रसक्तायां किं युज्यते स्वजनत्यागः ? विशेषतश्च

शरणागतानां परित्राणं किं वीरधर्मः ! यद्यहं क्रतौ दीक्षितो नाभविष्यं तर्हि सद्यः सायुधः परिपन्थिनोऽन्वधाविष्यम् ॥

परस्परविरोधे तु वयं पञ्चैव ते शतम् ।
परैः परिभवे प्राप्ते वयं पञ्चोत्तरं शतम् ॥

तत्सत्वरमितो गत्वा साम्ना दण्डेन वा गन्धर्वराजं विजित्य दुर्योधनं मोचयितुमर्हसि' इति ॥

अग्रजस्य गिराप्यननुनीते भीमसेने समीपे तिष्ठन् सव्यसाची ज्येष्ठस्य प्रियं कर्तुकामस्तत्समीहितं प्रतिज्ञाय सपदि प्रस्थितः । स गन्धर्वराजं समरे पराजित्य दुर्योधनं बन्धनादमोचयत् । युधिष्ठिरेण पश्चात् स्नेहपूर्वं मा पुनरेवंविधं साहसमाचर इति प्रबोधितो दुर्योधनस्त्रपाभरेण नतवदनः सुहृद्भिः प्रयासेनानुनीतः कथमपि राजधानीमनीयत ॥

# श्रीरामोदन्तः ।

बालकाण्डः

श्रीपतिं प्रणिपत्याहं श्रीवत्साङ्कितवक्षसम् ।
श्रीरामोदन्तमाख्यास्ये श्रीवाल्मीकिप्रकीर्तितम् ॥ १ ॥

पुरा विश्रवसः पुत्रो रावणो नाम राक्षसः ।
आसीदस्यानुजौ चास्तां कुम्भकर्णविभीषणौ ॥ २ ॥

ते तु तीव्रेण तपसा प्रत्यक्षीकृत्य वेधसम् ।
वव्रिरे च वरानिष्टादस्मादाश्रितवत्सलात् ॥ ३ ॥

रावणो मानुषादन्यैरवध्यत्वं तथात्मनः ।
निर्देवत्वेच्छया निद्रां कुम्भकर्णोऽवृणीत च ॥ ४ ॥

विभीषणो विष्णुभक्तिं वव्रे सत्त्वगुणान्वितः ।
तेभ्य एतान् वरान् दत्वा तत्रैवान्तर्दधे प्रभुः ॥ ५ ॥

रावणस्तु ततो गत्वा रणे जित्वा धनाधिपम् ।
लङ्कापुरीं पुष्पकं च हृत्वा तत्रावसत् सुखम् ॥ ६ ॥

यातुधानास्ततस्सर्वे रसातलनिवासिनः ।
दशाननं समाश्रित्य लङ्कां च सुखमावसन् ॥ ७ ॥

मन्दोदरीं मयसुतां परिणीय दशाननः ।
तस्यामुत्पादयामास मेघनादाह्वयं सुतम् ॥ ८ ॥

रसां रसातलञ्चैव विजित्य स तु रावणः ।
लोकानाक्रमयन् सर्वान् जहार च विलासिनीः ॥ ९ ॥

दूषयन् वैदिकं कर्म द्विजानर्दयति स्म सः ।
आत्मजेनान्वितो युद्धे वासवं चाप्यपीडयत् ॥ १० ॥

तदीयतरुरत्नानि पुनरानाय्य किंकरैः ।
स्थापयित्वा च लङ्कायामवसच्च चिराय सः ॥ ११

ततस्तस्मिन्नवसरे विधातारं दिवौकसः ।
उपगम्योचिरे सर्वं रावणस्य विचेष्टितम् ॥ १२ ॥

तदाकर्ण्य सुरैः साकं प्राप्य दुग्धोदधेस्तटम् ।
तुष्टाव च हृषीकेशं विधाता विविधैस्तवैः ॥ १३ ॥

आविर्भूयाथ दैत्यारिः पप्रच्छ च पितामहम् ।
किमर्थमागतोसि त्वं साकं देवगणैरिति ॥ १४ ॥

ततो दशाननात् पीडामजस्तस्मै न्यवेदयत् ।
तच्छ्रुत्वोवाच धातारं हर्षयन् विष्टरश्रवाः ॥ १५ ॥

अलं भयेनात्मयोने गच्छ देवगणैस्सह ।
अहं दाशरथिर्भूत्वा हनिष्यामि दशाननम् ॥ १६ ॥

आत्मांशैश्च सुरास्सर्वे भूमौ वानररूपिणः ।
जायेरन् मम साहाय्यं कर्तुं रावणनिग्रहे ॥ १७ ॥

एवमुक्त्वा विधातारं तत्रैवान्तर्दधे प्रभुः ।
पद्मयोनिस्तु गीर्वाणैस्समं प्रायात् प्रहृष्टधीः ॥ १८ ॥

अजीजनत्ततश्शक्रो वालिनं नाम वानरम् ।
सुग्रीवमपि मार्ताण्डो हनूमन्तं च मारुतः ॥ १९ ॥

पुरैव जनयामास जाम्बवन्तं च पद्मजः ।
एवमन्ये च विबुधाः कपीनजनयन् बहून् ॥ २० ॥

ततो वानरसङ्घानां वाली परिवृढोऽभवत्
अमीभिरखिलैः साकं किष्किन्धामध्युवास च ॥ २१ ॥

आसीद्दशरथो नाम सूर्यवंशेऽथ पार्थिवः ।
भार्यास्तिस्रोऽपि लब्ध्वासौ तासु लेभे न संततिम् ॥

ततः सुमन्त्रवचनादृश्यशृङ्गं स भूपतिः ।
आनीय पुत्रकामेष्टिमारेभे सपुरोहितः ॥ २३ ॥

अथाग्नेरुत्थितः कश्चित् गृहीत्वा पायसं चरुम् ।
एतत्प्राशय पत्नीस्त्वमित्युक्त्वादान्नृपाय सः ॥ २४ ॥

तद्गृहीत्वा तदैवासौ पत्नीः प्राशयदुत्सुकः ।
ताश्च तत्प्राशनादेव नृपाद्गर्भमधारयन् ॥ २५ ॥

पूर्णे कालेथ कौसल्या सज्जनाम्भोजभास्करम् ।
अजीजनद्रामचन्द्रं कैकेयी भरतं तथा ॥ २६ ॥

ततो लक्ष्मणशत्रुघ्नौ सुमित्राजीजनत्सुतौ ।
अकारयत पिता तेषां जातकर्मादिकं द्विजैः ॥ २७ ॥

ततो ववृधिरेऽन्योन्यं स्निग्धाश्चत्वार एव ते ।
सकलासु च विद्यासु नैपुण्यमभिलेभिरे ॥ २८ ॥

ततः कदाचिदागत्य विश्वामित्रो महामुनिः ।
ययाचे यज्ञरक्षार्थं रामं शक्तिधरोपमम् ॥ २९ ॥

वसिष्ठवचनाद्रामं लक्ष्मणेन समन्वितम् ।
कृच्छ्रेण नृपतिस्तस्य कौशिकस्य करे ददौ ॥ ३० ॥

तौ गृहीत्वा ततो गच्छन् बलामतिबलां तथा ।
अस्त्राणि च समग्राणि ताभ्यामुपदिदेश सः ॥ ३१ ॥

गच्छन् सहानुजो रामः कौशिकेन प्रचोदितः ।
ताटकामवधीद्धीमाँल्लोकपीडनतत्पराम् ॥ ३२ ॥

ततस्सिद्धाश्रमं प्राप्य कौशिकः सहराघवः ।
अध्वरं च समारेभे राक्षसाश्च समागमन् ॥ ३३ ॥

राघवस्तु ततोऽस्त्रेण क्षिप्त्वा मारीचमर्णवे ।
सुबाहुप्रमुखान् हत्वा यज्ञं चापालयन्मुनेः ॥ ३४ ॥

कौशिकेन ततो रामो नीयमानः सहानुजः

अहल्याशापनिर्मोक्षं कृत्वा सम्प्राप मैथिलम् ॥ ३५ ॥

जनकेनार्चितो रामः कौशिकेन प्रचोदितः

सीतानिमित्तमानीतं बभञ्ज धनुरैश्वरम् ॥ ३६ ॥

ततो दशरथं दूतैरानाय्य मिथिलाधिपः ।

रामादिभ्यस्तत्सुतेभ्यः सीताद्याः कन्यका ददौ ॥ ३७ ॥

ततो गुरुर्नियोगेन कृतोद्वाहः सहानुजः ।

राघवो निर्ययौ तेन जनकेनोपमानितः ॥ ३८ ॥

तदाकर्ण्य धनुर्भङ्गमायान्तं रोषभीषणम् ।

विजित्य भार्गवं राममयोध्यां प्राप राघवः ॥ ३९ ॥

ततः सर्वजनानन्दं कुर्वाणश्चेष्टितैः स्वकैः ।

तामध्युवास काकुत्स्थः सीतया सहितः सुखम् ॥ ४० ॥

